# ॥ आ नो भद्राः सूक्तम् ॥

## ऋग्वेद संहिता. मण्डलं – 1. अष्टकं – 1. सूक्तं – 89

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥ 1 ॥

देवानां भद्रा सुमतिर् ऋजूयतां देवानां रातिरभि नो नि वर्तताम् । देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥ 2 ॥

तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् । अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ 3 ॥

तन्नो वातो मयोभुवातु भेषजं तन्माता पृथिवी तत् पिता द्यौः । तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥ 4 ॥

तमीशानं जगतस्तस्थुषस्पतिं धियंजन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरब्धः स्वस्तये ॥ 5 ॥

स्वस्ति न इन्द्रो न वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ 6 ॥

पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः । अग्निजिव्हा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥ 7 ॥

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभि–र्व्यशेम देवहितं यदायुः ॥ 8 ॥

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवनति मा नो मध्यारीरिषतायुर्गन्तोः ॥ 9 ॥

अदितिर्द्यौरदितिरन्तरिक्ष–मदितिर्माता स पिता स पुत्रः । विश्वे देवा अदिति पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ 10 ॥

ॐ शान्तिः शान्तिः शान्तिः ॥